॥ कठरुद्रोपनिषत् ॥

परिव्रज्याधर्मपूगालंकारा यत्पदं ययुः ।
तदहं कठविद्यार्थं रामचन्द्रपदं भजे ॥

ॐ सहनाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥ देवा ह वै भगवन्तमब्रुवन्नधीहि भगवन्ब्रह्मविद्याम् ।
स प्रजापतिरब्रवीत्सशिखान्केशान्निष्कृत्य विसृज्य यज्ञोपवीतं
निष्कृत्य पुत्रं दृष्ट्वा त्वं ब्रह्मा त्वं यज्ञस्त्वं वषट्कार-
स्त्वमोङ्कारस्त्वं स्वाहा त्वं स्वधा त्वं धाता त्वं विधाता त्वं
प्रतिष्ठाऽसीति वदेत् । अथ पुत्रो वदत्यहं ब्रह्माहं यज्ञोऽहं
वषट्कारोऽहमोंकारोऽहं स्वाहाहं स्वधाहं धाताहं
विधाताहं त्वष्टाहं प्रतिष्ठास्मीति ।
तान्येतान्यनुव्रजन्नाश्रुमापातयेत् ।
यदश्रुमापातयेत्प्रजां विच्छिन्द्यात् ।
प्रदक्षिणमावृत्यैतच्चैतच्चानवेक्षमाणाः प्रत्यायन्ति ।
स स्वर्ग्यो भवति ब्रह्मचारी वेदमधीत्य वेदोक्ताचरितब्रह्मचर्यो
दारानाहृत्य पुत्रानुत्पाद्यताननुपादिभिर्वितत्येष्ट्वा च
शक्तितो यज्ञैः । तस्य संन्यासो गुरुभिरनुज्ञातस्य बान्धवैश्च ।
सोऽरण्यं परेत्य द्वादशरात्रं पयसाग्निहोत्रं जुहुयात् ।
द्वादशरात्रं पयोभक्षा स्यात् । द्वादशरात्रस्यान्ते
अग्नये वैश्वानराय प्रजापतये च प्राजापत्यं चरुं
वैष्णवं त्रिकपालमग्निं संस्थितानि पूर्वाणि दारुपात्राण्याग्नौ
जुहुयात् । मृण्मयान्यप्सु जुहुयात् । तैजसानि गुरवे दद्यात् ।
मा त्वं मामपहाय परागाः । नाहं त्वामपहाय परागामिति ।
गार्हपत्यदक्षिणाग्न्याहवनीयेष्वरणिदेशाद्भस्ममुष्टिं
पिबेदित्येके । सशिखान्केशान्निष्कृत्य विसृज्य यज्ञोपवीतं
भूःस्वाहेत्यप्सु जुहुयात् । अत ऊर्ध्वमनशनमपां प्रवेश-
मग्निप्रवेशं वीराध्वानं महाप्रस्थानं वृद्धाश्रमं वा
गच्छेत् । पयसा यं प्राश्नीयात्सोऽस्य सायंहोमः । यत्प्रातः
सोऽयं प्रातः । यद्दर्शे तद्दर्शनम् । यत्पौर्णमास्ये तत्पौर्णमास्यम् ।
यद्वसन्ते केशश्मश्रुलोमनखानि वापयेत्सोऽस्याग्निष्टोमः ।
संन्यस्याग्निं न पुनरावर्तयेन्मृत्युर्जयमावहमित्यध्यात्म-

मन्त्रान्पठेत् । स्वस्ति सर्वजीवेभ्य इत्युक्त्वात्मानमनन्यं ध्यायन्
तदूर्ध्वबाहुर्विमुक्तमार्गो भवेत् ।
अनिकेतश्चरेत् । भिक्षाशी यत्किंचिन्नाद्यात् । लवैकं न धावयेज्जन्तुसंरक्षणार्थं
वर्षवर्जमिति । तदपि श्लोका भवन्ति ।
कुण्डिकां चमसं शिक्यं त्रिविष्टमुपानहौ ।
शीतोपघातिनीं कन्थां कौपीनाच्छादनं तथा ॥ १॥

पवित्रं ज्ञानशाटीं च उत्तरासङ्गमेव च ।
यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः ॥ २॥

स्नानं पानं तथा शौचमद्भिः पूताभिराचरेत् ।
नदीपुलिनशायी स्याद्देवागारेषु वा स्वपेत् ॥ ३॥

नात्यर्थं सुखदुःखाभ्यां शरीरमुपतायेत् ।
स्तूयमानो न तुषेत निन्दितो न शपेत्परान् ॥ ४॥

ब्रह्मचर्येण संतिष्ठेदप्रमादेन मस्करी ।
दर्शनं स्पर्शनं केलिः कीर्तनं गुह्यभाषणम् ॥ ५॥

संकल्पोऽध्यवसायश्च क्रियान्निर्वृत्तिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥ ६॥

विपरीतं ब्रह्मचर्यमनुष्ठेयं मुमुक्षुभिः ।
यज्जगद्भासकं भानं नित्यं भाति स्वतः स्फुरत् ॥ ७॥

स एव जगतः साक्षी सर्वात्मा विमलाकृतिः ।
प्रतिष्ठा सर्वभूतानां प्रज्ञानघनलक्षणः ॥ ८॥

न कर्मणा न प्रजया न चान्येनापि केचित् ।
ब्रह्मवेदनमात्रेण ब्रह्माप्नोत्येव मानवः ॥ ९॥

तद्विद्या विषयं ब्रह्म सत्यज्ञानसुखाद्वयम् ।
संसारे च गुहावाच्ये मायाज्ञानादिसंज्ञके ॥ १०॥

निहितं ब्रह्म यो वेद परमे व्योम्नि संज्ञिते ।
सोऽश्नुते सकलान्कामान्क्रमेणैव द्विजोत्तमः ॥ ११॥

प्रत्यगात्मानमज्ञानमायाशक्तेश्च साक्षिणम् ।

एकं ब्रह्माहमस्मीति ब्रह्मैव भवति स्वयम् ॥ १२॥

ब्रह्मभूतात्मनस्तस्मादेतस्माच्छिक्तमिश्रितात् ।
अपञ्चीकृत आकाशसंभूतो रज्जुसर्पवत् ॥ १३॥

आकाशाद्वायुसंज्ञस्तु स्पर्शोऽपञ्चीकृतः पुनः ।
वायोरग्निस्तथा चाग्नेराप अद्भ्यो वसुन्धरा ॥ १४॥

तानि भूतानि सूक्ष्माणि पञ्चीकृत्येश्वरस्तदा ।
तेभ्य एव विसृष्टं तद्ब्रह्माण्डादि शिवेन ह ॥ १५॥

ब्रह्माण्डस्योदरे देवा दानवा यक्षकिन्नराः ।
मनुष्याः पशुपक्ष्याद्यास्तत्तत्कर्मानुसारतः ॥ १६॥

अस्थिस्नाय्वादिरूपोऽयं शरीरं भाति देहिनाम् ।
योऽयमन्नमयो ह्यात्मा भाति सर्वशरीरिणः ॥ १७॥

ततः प्राणमयो ह्यात्मा विभिन्नश्चान्तरः स्थितः ।
ततो विज्ञान आत्मा तु ततोऽन्यश्चान्तरः स्वतः ॥ १८॥

आनन्दमय आत्मा तु ततोऽन्यश्चान्तरस्थितः ।
योऽयमन्नमयः सोऽयं पूर्णः प्राणमयेन तु ॥ १९॥

मनोमयेन प्राणोऽपि तथा पूर्णः स्वभावतः ।
तथा मनोमयो ह्यात्मा पूर्णो ज्ञानमयेन तु ॥ २०॥

आनन्देन सदा पूर्णः सदा ज्ञानमयः सुखम् ।
तथानन्दमयश्चापि ब्रह्मणोऽन्येन साक्षिणा ॥ २१॥

सर्वान्तरेण पूर्णश्च ब्रह्म नान्येन केनचित् ।
यदिदं ब्रह्मपुच्छाख्यं सत्यज्ञानद्वयात्मकम् ॥ २२॥

सारमेव रसं लब्ध्वा साक्षाद्देही सनातनम् ।
सुखी भवति सर्वत्र अन्यथा सुखता कुतः ॥ २३॥

असत्यस्मिन्परानन्दे स्वात्मभूतेऽखिलात्मनाम् ।
को जीवति नरो जन्तुः को वा नित्यं विचेष्टते ॥ २४॥

तस्मात्सर्वात्मना चित्ते भासमानो ह्यसौ नरः ।
आनन्दयति दुःखाढ्यं जीवात्मानं सदा जनः ॥ २५॥

यदा ह्येवैष एतस्मिन्नदृश्यत्वादिलक्षणे ।
निर्भेदं परमाद्वैतं विन्दते च महायतिः ॥ २६॥

तदेवाभयमत्यन्तकल्याणं परमामृतम् ।
सद्रूपं परमं ब्रह्म त्रिपरिच्छेदवर्जितम् ॥ २७॥

यदा ह्येवैष एतस्मिन्नल्पमप्यन्तरं नरः ।
विजानाति तदा तस्य भयं स्यान्नात्र संशयः ॥ २८॥

अस्यैवानन्दकोशेन स्तम्बान्ता विष्णुपूर्वकाः ।
भवन्ति सुखिनो नित्यं तारतम्यक्रमेण तु ॥ २९॥

तत्तत्पदविरक्तस्य श्रोत्रियस्य प्रसादिनः ।
स्वरूपभूत आनन्दः स्वयं भाति परे यथा ॥ ३०॥

निमित्तं किंचिदाश्रित्य खलु शब्दः प्रवर्तते ।
यतो वाचो निवर्तन्ते निमित्तानामभवतः ॥ ३१॥

निर्विशेषे परानन्दे कथं शब्दः प्रवर्तते ।
तस्मादेतन्मनः सूक्ष्मं व्यावृतं सर्वगोचरम् ॥ ३२॥

यस्माच्छ्रोत्रत्वगक्ष्यादिखादिकर्मेन्द्रियाणि च ।
व्यावृत्तानि परं प्राप्तुं न समर्थानि तानि तु ॥ ३३॥

तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ।
विदित्वा स्वात्मरूपेण न बिभेति कुतश्चन ॥ ३४॥

एवं यस्तु विजानाति स्वगुरोरुपदेशतः ।
स साध्वासाधुकर्मभ्यां सदा न तपति प्रभुः ॥ ३५॥

ताप्यतापकरूपेण विभातमखिलं जगत् ।
प्रत्यगात्मतया भाति ज्ञानाद्वेदान्तवाक्यजात् ॥ ३६॥

शुद्धमीश्वरचैतन्यं जीवचैतन्यमेव च ।
प्रमाता च प्रमाणं च प्रमेयं च फलं तथा ॥ ३७॥

इति सप्तविधं प्रोक्तं भिद्यते व्यवहारतः ।
मायोपाधिविनिर्मुक्तं शुद्धमित्यभिधीयते ॥ ३८॥

मायासंबन्धतश्चेशो जीवोऽविद्यावशस्तथा ।
अन्तःकरणसंबन्धात्प्रमातेत्यभिधीयते ॥ ३९॥

तथा तद्वृत्तिसंबन्धात्प्रमाणमिति कथ्यते ।
अज्ञातमपि चैतन्यं प्रमेयमिति कथ्यते ॥ ४०॥

तथा ज्ञातं च चैतन्यं फलमित्यभिधीयते ।
सर्वोपाधिविनिर्मुक्तं स्वात्मानं भावयेत्सुधीः ॥ ४१॥

एवं यो वेद तत्त्वेन ब्रह्मभूयाय कल्पते ।
सर्ववेदान्तसिद्धान्तसारं वच्मि यथार्थतः ॥ ४२॥

स्वयं मृत्वा स्वयं भूत्वा स्वयमेवावशिष्यते ॥ इत्युपनिषत् ॥

ॐ सहनाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति कठरुद्रोपनिषत्समाप्ता ॥